॥ श्री स्वामी दिव्यानंदाय नमः ॥

# आराधना

✵ आशिर्वाद ✵

अनंतश्री विभूषित श्रोत्रिय ब्रह्मनिष्ठ कृपाळु सद्गुरु

स्वामी दिव्यानंदपुरीजी महाराज

✵ प्रेरणा ✵

स्वामी श्री महेशानंदपुरीजी महाराज

मुद्रक : सायली ऑफसेट, जिंतूर © २२०२०५

# अनुक्रमणिका



मुद्रक : सायली ऑफसेट, जिंतूर © २२०२०४

आराधना

# -: मंगलाचरण :-

हरिः ॐ सहनाववतु सहनौ भुनक्तु सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै।
ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!!

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
संजीवयत्यखिलशक्तिधरः स्वधाम्ना।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्
प्राणान्नमो भगवते पुरुषाय तुभ्यम्॥

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
द्वंद्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि॥

विनायकं गुरुं नौमि साखरेनाम विश्रुतम्
येषां चरणसान्निध्यात् जीवा मुक्ता भवन्ति हि।
साखरेवंशविख्यातं ज्ञानदानपरायणं
विनायकं गुरुं वन्दे भवबन्धविमुक्तये॥

श्री रंगनाथं गुरुराजवर्यं मुमुक्षूणां ज्ञानदानैकदक्षम्।
प्रभावतिक्षेत्रनिवासिनं तं नमामि वेदान्तविदां वरिष्ठम्॥

# -: वैदिक-शान्तिपाठ :-

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पति : । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।

***ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥१॥***

ॐ सहनाववतु । सह नौ भुनक्तु । सहवीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ।

***ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥२॥***

ॐ यश्छन्दसामृषभोविश्वरुपः। छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्यदेव ! धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयापिहितः । श्रुतं मे गोपाय ॥

***ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥३॥***

ॐ अहं वृक्षस्य रेरिवा। कीर्तिःपृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणं सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम्॥

*ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥४॥*

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

*ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥५॥*

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु॥

*ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥६॥*

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्मएधि। वेदस्य म आणीस्थः श्रुतं मे मा

प्रहासीरनेनाधीतेनाहोरात्रान्संदधामि ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम् अवतु वक्तारम् ॥

ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥७॥

ॐ भद्रं नो अपिवातय मनः

ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥८॥

ॐ भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायु :। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥९॥

ॐ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥१०॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो महद्भ्यो नमो गुरुभ्यः । सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मि । ब्रह्मैवाहमस्मि ।
ॐ नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्यानस्मद्गुरुन्संततमानतोऽस्मि ॥

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शङ्करं लोकशङ्करम् ॥
शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनःपुनः ॥
ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥
यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याता सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥
ॐ शांन्तिः ! शांन्तिः !! शांन्तिः !!! ॥५॥

शान्तिपाठा नंतर आपल्या इष्टदेवतेचे थोडावेळ ध्यान करावे व नंतर इष्टदेवतेचा अथवा श्रीगुरुमंत्राचा कमीतकमी अकरा माळी जप करावा ।

# -: अथ सप्तश्लोकी गीता :-

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१॥

स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ॥२॥

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥३॥

कविं पुराणमनुशासितार मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरुप मादित्यवर्ण तमसः परस्तात् ॥४॥

उर्ध्वमूलमधःशाख मश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्यपर्णानि यस्तं वेद स वेदवित् ॥५॥

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥६॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैव मात्मानं मत्परायणः ॥७॥

*॥ सप्तश्लोकी गीता सम्पुर्णा ॥*

या सप्तश्लोकी गीतेचा नित्यपाठ केल्याने घरामध्ये सुख-शांति रहाते, सर्व तिर्थवास होतो, महापाप, वास्तुदोष आदी निवारण होतात. म्हणून प्रातःकाली पाठ करत जाणे.

# -: अथ शिवमानसपूजा :-

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम् ।
जातीचम्पक-बिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥१॥
सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम् ।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥२॥
छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा ।
साष्टाङ्गं प्रणतिःस्तुतिर्बहुविधा ह्येतत्समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥३॥
आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोःप्रदक्षिणविधिः स्तोत्राणि सर्वागिरो
यद्यत्कर्म करोमि तत्त दखिलं शम्भो तवाराधनम् ॥४॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्री महादेव शम्भो ॥५॥

## -: अथ नीलसरस्वतिस्तोत्रम् :-

घोररुपे महारावे सर्व शत्रु भयंकरि।
भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥१॥
ॐ सुरासुरार्चिते देवि सिद्धगन्धर्व सेविते।
जाड्यपापहरे देवि त्राहि मां शरणागतम् ॥२॥
जटाजूटसमायुक्ते लोलजिह्वान्तकारिणी।
द्रुतबुद्धिकरे देवि त्राहि मां शरणागतम् ॥३॥
सोम्यक्रोधधरे रुपे चण्डरुपे नमोस्तुऽते।
सृष्टीरुपे नमस्तुभ्यं त्राहि मां शरणागतम् ॥४॥
जडानां जडतां हन्ति भक्तानां भक्तवत्सला।
मूढतां हर मे देवि त्राहि मां शरणागतम् ॥५॥
वं ऱ्हूं ऱ्हूं कामये देवि बली होमप्रिये नमः।

उग्रतारे नमो नित्यं त्राहि मां शरणागतम् ॥६॥
बुद्धिं देहि यशो देहि कवित्वं देहि देहि मे ।
मूढत्वं च हरेद्देवि त्राहि मां शरणागतम् ॥७॥
इन्द्राविलसद्द्वंद्ववन्दिते करुणामयि ।
तारे ताराधिनाथास्ये त्राहि मां शरणागतम् ॥८॥
अष्टम्यां च चतुर्दस्यां नवम्यां यः पठेन्नर : ।
षड्मासैः सिद्धिमाप्नोति नात्रकार्या विचारणा ॥९॥
मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां तर्कव्याकरणादिकम् ॥१०॥
इदं स्तोत्रं पठेद्यस्तु सततं श्रद्धयान्वितः ।
तस्य शत्रु क्षयं याति महाप्रज्ञा प्रजायते ॥११॥
पीडायां वापी संग्रामे जाड्ये दाने तथा भये ।
य इदं पठति स्तोत्रं शुभं तस्य न संशयः ।
इति प्रणम्य स्तुत्वाच योनि मुद्रां प्रदर्शयेत् ॥१२॥

*॥ इति नीलसरस्वतिस्तोत्रम् ॥*

# -: अथ रुद्रसूक्तम् :-

ॐ नमस्ते रुद्रमन्यव उतोत इषवे नमः । बाहुभ्यामुत ते नमः ॥१॥ याते रुद्रशिवातनूरघोरा पापकाशिनि । तया नस्तन्वाशन्तमया गिरिशन्ताभिचाकशीहि ॥२॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवांगिरित्रतांकुरु माहि गुं सीःपुरुषञ्जगत् ॥३॥ शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथानः सर्वमिज्जगदयक्ष्म गुं सुमनाऽअसत् ॥४॥ अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यो धराचीः परासुव ॥५॥ असौ यस्ताम्रोऽअरुण ऽ उत बभ्रुः सुमंगलः । येचैनं गुं रुद्राऽअभितो दिक्षुश्रिताः सहस्रशौ वैषा गुं हेडऽईमहें ॥६॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्यः सदृष्टो मृडयातिनः ॥७॥ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये ऽ अस्य सत्वानोहन्तेभ्यो करन्नमः ॥८॥ प्रमुञ्चधन्वनस्त्वमुभयोरात्न्योर्ज्याम् । याश्च ते हस्त ऽ इषवः पराता भगवोव्वप ॥९॥ विज्ज्यन्धनुः

कपर्दिनो विशल्यो बाणवाँऽऽउत । अनेशन्नस्य याऽ इषवऽआभुरस्य निषङ्गधिः ॥१०॥ याते हेतिर्मीढुष्टमहस्ते बभूवते धनुः । तयास्मान् विश्वतस्त्वमयक्ष्मया परिभुज ॥११॥ परितेधन्वनो हेतिरस्मान्वृणक्तुविश्वतः । अथो यऽइषुधिस्त वारेऽअस्मन्निधेहितम् ॥१२॥ अवतत्यधनुष्ट्वगुं सहस्राक्ष शतेषुधे । निशीर्यशल्यानाम्मुखाशिवोनः सुमनाभव ॥१३॥ नमस्तऽ आयुधायानातताय धृष्णवे । उभाम्यामुतते नमो बाहुभ्यान्तवधन्वने ॥१४॥ मानो महान्तमुतमानो अर्भकमान उक्षन्तमुतमान उक्षितम् । मानो वधीः पितरम्मोत मातरम्मान प्रियास्तन्वो रुद्ररीरिषः ॥१५॥ मानस्तोके तनये मानऽआयुषिमानोगोषुमानोऽ अश्वेषुरीरिषः । मानो वीरान्रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे ॥१६॥

# -: बिल्वाष्टकम् :-

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुतम् ।
त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥१॥
त्रिशाखैर्बिल्वपत्रैश्च अच्छिद्रैः कौमलैस्तथा ।
शिवपूजां करिष्यामि एकबिल्वं शिवार्पणम् ॥२॥
अखण्डबिल्वपत्रेण पूजितं नन्दिकेश्वरम् ।
शुध्यते सर्वपापेभ्य एक बिल्वं शिवार्पणम् ॥३॥
शालिग्रामशिलामेकां विप्राणां जातु अर्पयेत् ।
सोमयज्ञमहादानमेकबिल्वं शिवार्पणम् ॥४॥
दन्तिकोटिसहस्राणि अश्वमेधशतानि च ।
कोटिकन्यामहादानमेकबिल्वं शिवार्पणम् ॥५॥
लक्ष्म्याश्च स्तन उत्पन्नं महादेव-सदाप्रियम् ।
बिल्ववृक्षं प्रयच्छामि एक बिल्वं शिवार्पणम् ॥६॥
दर्शनं बिल्ववृक्षस्य स्पर्शनं पापनाशनम् ।
अघोरपापसंहारमेकबिल्वं शिवार्पणम् ॥७॥
मूलतो ब्रह्मरुपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरुपाय एक बिल्वं शिवार्पणम् ॥८॥

बिल्वाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ॥९॥

*॥ इति श्री बिल्वाष्टकं सम्पूर्णम् ॥*

## -: श्रीशिवपञ्चाक्षरस्तोत्रम् :-

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय ।
नित्याय शुद्धाय दिगम्बराय तस्मै 'न'काराय नमः शिवाय ॥१॥

मन्दाकिनीसलिलचन्दनचर्चिताय
नन्दीश्वरप्रमथनाथमहेश्वराय ।
मन्दारपुष्पबहुपुष्पसुपूजिताय तस्मै 'म'काराय नमः शिवाय ॥२॥

शिवाय गौरीवदनाब्जवृन्दसुर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै 'शि'काराय नमः शिवाय ॥३॥

वसिष्ठकुम्भोद्भवगौतमार्यमुनीद्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै 'व'काराय नमः शिवाय ॥४॥

यक्षस्वरुपाय जटाधराय पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय तस्मै 'य'काराय नमः शिवाय ॥५॥

पञ्चाक्षरमिदं पुण्यं य पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ६॥

*॥ इति श्रीशंकराचार्यविरचितं पञ्चाक्षरस्तोत्रं सम्पूर्णम् ॥*

## -:रुद्राष्टकम् :-

नमामीशमीशान निर्वाणरूपम् ।
विभुं व्यापकं ब्रह्म वेदस्वरुपम् ॥
अजं निर्गुणं निर्विकल्पं निरीहम् ।
चिदाकाशमाकाशवासं भजेऽहम् ॥१॥
निराकारमोंकारमूलं तुरीयम् ।
गिराज्ञानगोतीतमीशं गिरीशम् ॥
करालं महाकालकालं कृपालम् ।
गुणागारसंसारपारं नतोऽहम् ॥२॥
तुषाराद्रिसंकाशगौरं गभीरम् ।
मनोभूतकोटिप्रभाश्रीशरीरम् ॥
स्फुरन्मौलिकल्लोलिनी चारुगङ्गा ।
लसद्भालबालेन्दुकण्ठे भुजङ्गा ॥३॥

चलत्कुण्डलं भ्रूसुनेत्रं विशालम् ।
प्रसन्नाननं नीलकण्ठं दयालम् ॥
मृगाधीशचर्माम्बरं मुण्डमालम् ।
प्रियं शङ्करं सर्वनाथं भजामि ॥४॥
प्रचण्डं प्रकृष्टं प्रगल्भं परेशम् ।
अखण्डं अजं भानुकोटिप्रकाशम् ॥
त्रयःशूलनिर्मूलनं शूलपाणिम् ।
भजेऽहं भवानीपतिंभावगम्यम् ॥५॥
कलातीतकल्याणकल्पान्तकारी ।
सदासज्जनानन्ददाता पुरारी ॥
चिदानन्दसन्दोहमोहापहारी ।
प्रसीद प्रसीद प्रभो मन्मथारी ॥६॥
न यावत् उमानाथपादारविन्दम् ।
भजन्तीह लोके परे वा नराणाम् ॥
न तावत्सुखं शान्तिसन्तापनाशम् ।
प्रसीद प्रभो सर्वभूताधिवासम् ॥७॥
न जानामि योगं जपं नैव पूजाम् ।

नतोऽहं सदा सर्वदा शम्भु तुभ्यम् ॥

जराजन्मदुःखौघतातप्यमानम् ।

प्रभो पाहि आपन्नमामीश शम्भो ॥८॥

रुद्राष्टकमिदं प्रोक्तं विप्रेण हरतुष्टये ।

ये पठन्ति नरा भक्त्यां तेषां शम्भुः प्रसीददति ॥९॥

## -: श्रीपांडुरंगाष्टकम् :-

महायोगपीठे तटे भीमरथ्या वरं पुंडरीकाय दातुं मुनींद्रैः ।
समागत्य तिष्ठन्तमानंदकंदं परब्रह्मलिंगं भजे पांडुरंगम् ॥१॥
तडिद्वाससं नीलमेघावभासं रमामंदिरं सुंदरं चित्प्रकाशम् ।
वरं त्विष्टिकायां समन्यस्तपादं परब्रह्म० ॥२॥
प्रमाणं भवाब्धेरिदं मामकानां नितंबःकराभ्यांधृतो येन तस्मात् ।
विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्म० ॥३॥
स्फुरत्कौस्तुभालंकृतं कंठदेशे श्रिया जुष्टकेयुरकं श्रीनिवासम् ।
शिव शान्तमीड्यं वरं लोक-पालं परब्रह्म० ॥४॥
शरच्चंद्रबिंबाननं चारुहास लसत्कुण्डलाक्रान्तगंडस्थलाङ्गम् ।
जपारागबिंबाधरं कंजनेत्रं परब्रह्म० ॥५॥

किरीटोज्ज्वलत्सर्वदिक्प्रान्तभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः।
त्रिभंगाकृतिं बर्हमाल्यावतंसं परब्रह्म० ॥६॥

विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम्।
गवां वृंदकानन्ददं चारुहासं परब्रह्म० ॥७॥

अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम्।
प्रसन्नं प्रपन्नार्तिहं देवदेवं परब्रह्म० ॥८॥

स्तवं पाडुरंगस्य वै पुण्यदं ये पठन्त्येकचित्तेन भक्त्या च नित्यम्।
भवांभोनिधिं तेऽपि तीर्त्वाऽन्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति ॥९॥

*॥ श्री पांडुरंगाष्टक संपूर्णम् ॥*

## -: विठ्ठलस्मरणम् :-

घननील-सुकोमल-कान्ततनु कटिशोभितदक्षिणवामकरम्।
भुवि-राजितसुंदरपादमजं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥१॥

अरुणोदयकान्तिनिभे वदने स्वधरे मधुरे ललितं कलितम्।
मृदुहास्यमिदं सुखदं विमलं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥२॥

शरदम्बरमण्डितचन्द्रनिभं मुनिमानसमानसमोदविधम्।
निजलोकहिताय चलन्नयनं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥३॥

मकराकृतिकुण्डलजा सुषमा सुविभाती कपोलतले प्रतिमा।
हृदये विमले विधिना वरणं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥४॥
त्वयि शस्त्रबलं न च शास्त्रबलं नच वित्तबलं न च धर्म बलम्।
यदि काङ्क्षसि संसृतितस्तरणं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥५॥
जननी जनकं त्यज रे ललनां तनयं तनयां तनुसुन्दरताम्।
व्यसनेषु न कोपि सहायकरं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥६॥
मनसा मनने वचसा वचने जननं न पुनर्जननीजठरे।
न हि जन्म कुतो मरणं शरणं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥७॥
शुकसारसकोकिलकेकिगणैः रतिशोभितमङ्कितगाङ्गकणैः।
गिरिराजनिकुंजमकारि गृहं कुरु विठ्ठल विठ्ठल रे स्मरणम् ॥८॥
ऋषयो मुनयः प्रथमाश्रमिणो विचरन्ति मुदा सुविचार्य हृदा।
ऋषिकेशमवाप्य ददात्यभयं कुरु विठ्ठल विठ्ठल रे स्मरणंम् ॥९॥

*॥इति श्रीदिव्यानन्दस्वामीविरचितं स्तोत्रमिदं संपूर्णम्॥*

## -: गुरुपुजेचे मन्त्र :-

ॐ नमोऽस्त्वनन्तनाय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः॥

नमः कमल-नाभाय नमस्ते जलशायिने ।
नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥
वासनाद्वासुदेवस्य वासितं भुवनत्रयं ।
सर्वभुतनिवासोऽसि वासुदेव नमोस्तु ते ॥
शंकरं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥
ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥
अखण्डमण्डलकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितम् येन तस्मै श्रीगुरवे नमः ॥
गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः ॥
आकाशात् पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥

## -: रात्रिशयनस्तुति :-

जलेरक्षतु वाराहः स्थले रक्षतु वामनः ।
अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥१॥
अगस्तिर्माधवश्चैव मुचुकुन्दो महाबलः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥२॥
सर्पापसर्प भद्रं ते दूरं गच्छ महाविष ।
जनमेजयस्य यज्ञान्ते अस्तीकवचनं स्मर ॥३॥
विश्वेश्वरी जगद्धात्री स्थितिसंहारकारिणी ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥४॥
तिस्रो भार्या कफल्लस्य दाहिनी मोहिनी सती ।
तासां स्मरणमात्रेण चोरो गच्छति निष्फलः ॥५॥

## -: श्री शिवमहिम्नः स्तोत्रम् :-

॥ श्री गणेशाय नमः ॥

गजाननं भूतगणादिसेवितं
कपित्थ जम्बूफल चारु भक्षणम् ।
उमासुतं शोक विनाशकारकं
नमामि विघ्नेश्वर पादपङ्कजम् ॥

महिम्नः पारं ते परम विदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येषः स्तोत्रे हर निरपवादः परिकरः ॥ १ ॥

अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्यविषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥

मधुस्फीता वाचः परमममृतं निर्मितवत -
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम्
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तुव्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन् वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥ ४ ॥

किमीहः किं कायः स खलु किमुपायस्त्रिभुवनं

किमधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ ५ ॥
अजन्मानो लोकाः किमवयववन्तोऽपि जगता -
मधिष्ठतारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥
त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥
महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥
ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं
परोध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।

समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव
स्तुवंजिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥ ९ ॥

तवैश्वर्यं यत्नाद् यदुपरि विरंचिर्हरिरधः
परिच्छेत्तुं यातावनलमनलस्कंधवपुषः ।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥

अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ।
शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ ११ ॥

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं ।
बलात्कैलासेपि त्वदधिवसतौ विक्रमयतः ॥
अलभ्या पातालेप्यलसचलिताङ्गुष्ठशिरसि ।
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती ।
मधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः ॥
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो ।
र्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा।
विधेयस्यासीद्यस्त्रिनयन विषं संहृतवत: ॥
सकल्माष: कण्ठे तव न कुरुते न श्रियमहो।
विकारोपि श्लाघ्यो भुवनभयभङ्गव्यसनिन: ॥ १४ ॥

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे।
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखा:।
स पश्यन्नीश त्वामिरतसुरसाधारणमभूत्।
स्मर: स्मर्तव्यात्मा न हि वशिषु पथ्य: परिभव: ॥ १५ ॥

मही पादाघाताद् व्रजति सहसा संशयपदं।
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहणम्।
मुहुर्द्यौर्दौ:स्थ्यं यात्यनिभृतजटाताडिततटा।
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥

वियद्व्यापी तारागणगुणितफेनोद्गमरुचि:।
प्रवाहो वारां य: पृषतलघुदृष्ट: शिरसि ते।
जगद् द्वीपाकारं जलधिवलयं तेन कृतमि।
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपु: ॥ १७ ॥

रथ: क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो।
रथाङ्गे चन्द्रार्कौ रथचरणपाणि: शर इति।

दिधक्षोस्ते को ऽ यं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥ १८ ॥

हरिस्ते साहस्रं कमलबलिमाधाय पदयो -
र्यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ १९ ॥

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसुजनः ॥ २० ॥

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता
मृषीणामार्त्विज्यं शरणद् सदस्याः सुरगणाः ।
क्रतुभ्रंशस्त्वतः क्रतुफलविधानव्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥ २१ ॥

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेद्यापि त्यज्यति न मृगव्याधरभसः ॥ २२ ॥

स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि।
यदि स्त्रैणं देवी यमनिरतदेहार्धघटना
दवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥
श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा
श्चिताभस्मालेपः स्रगपि नृकरोटी परिकरः।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तृणां वरद परमं मङ्गलमसि ॥ २४ ॥
मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं हृद इव निमज्यामृतमये
दधत्यन्तस्तत्त्वं किमपियमिनस्तत् किल भवान् ॥ २५ ॥
त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमितिच।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥ २६ ॥
त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा
नकाराद्यैर्वर्णै स्त्रिभिरभिदधत्तीर्ण विकृति।

तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २७ ॥

भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां
स्तथा भीमेशानाविति यदभिधानाष्टक मिदम् ।
अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योस्मि भवते ॥ २८ ॥

नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति सर्वाय च नमः ॥ २९ ॥

बहलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः ।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३० ॥

कृशपरिणतिचेतः क्लेशवश्यं क्वचेदं
क्व च तवगुणसीमोल्लङ्घिनी शश्वदृद्धिः ।
इति चकितममन्दीकृत्य मां भक्तिराधाद्
वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे,
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकालं,
तदपि तव गुणानामीश पारं न याति ॥ ३२ ॥

असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौले -
ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ।
सकलगणवरिष्ठः पुष्पदन्ताभिधानो
रुचिरमलघुवृतैः स्तोत्रमेतच्चकार ॥ ३३ ॥

अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्
पठति परमभक्त्या शुद्धचित्तः पुमान् यः ।
स भवति शिवलोके रुद्रतुल्यस्तथात्र
प्रचुरतरधनायुः पुत्रवान् कीर्तिमाँश्च ॥ ३४ ॥

दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः ।
महिम्नः स्तवपाठस्य कलां नार्हन्ति षोडशीम् ॥ ३५ ॥

आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम् ।
अनौपम्यं मनोहारि शिवमीश्वरवर्णनम् ॥ ३६ ॥

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ ३७ ॥

कुसुमदशननामा सर्वगन्धर्वराजः
शिशुशशिधरमौलेर्देवदेवस्य दासः ।
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद्दीव्यदीव्यं महिम्नः ॥ ३८ ॥

सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्रांजलिर्नान्यचेताः ।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥ ३९ ॥

श्री पुष्पदन्तमुखपंकजनिर्गतेन
स्तोत्रेण किल्बिषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥ ४० ॥

इत्येषा वाङ्मयी पूजा श्रीमच्छंकरपादयोः
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ।
यदक्षरं पद भ्रष्टं मात्राहीनं च यद्भवेत्
तत्सर्वं क्षम्यतां देव ! प्रसीद परमेश्वर ! ॥ ४१ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
॥ ॐ शांतिः शांतिः शांतिः ॥

ॐ महादेव शिवशंकर शम्भो उमाकान्त हर त्रिपुरारे ।
मृत्युंजय वृषभध्वज शूलिन् गंगाधर मृड मदनारे ॥
हर शिव शंकर गौरीशं वन्दे गंगाधरमीशम् ।
रुद्रं पशुपतिमीशानं कलये काशीपुरिनाथम् ॥
जय शम्भो जय शम्भो शिवगौरीशंकर जय शम्भो ।
जय शम्भो जय शम्भो शिवगौरीशंकर जय शम्भो ।
शिव ! शिवेति शिवेति शिवेति वा
हर ! हरेति हरेति हरेति वा ।
भव ! भवेति भवेति भवेति वा
मृड ! मृडेति मृडेति मृडेति वा ॥
भज मनः शिव मेव निरंतरं ।
स्मर मनः शिव मेव निरंतरं ॥
जप मनः शिव मेव निरंतरं ॥
रट मनः शिव मेव निरंतरं ॥

# ॐ श्री लक्ष्म्यष्टोत्तरशतनामस्तोत्रम्

**देव्युवाच**

ॐ देवदेव महादेव त्रिकालज्ञ महेश्वर
करुणाकर देवेश भक्तानुग्रहकारक
अष्टोत्तर शतं लक्ष्म्याः श्रोतुमिच्छामि तत्त्वतः ॥१॥

**ईश्वर उवाच**

देवि साधु महाभागे, महाभाग्यप्रदायकम् ।
सर्वैश्वर्यकरं पुण्यं, सर्वपापप्रनाशनम् ॥२॥
सर्वदारिद्र्यशमनं, श्रवणाद्भुक्तिमुक्तिदम् ।
राजवश्यकरं दिव्यं, गुह्याद्गुह्यतमं परम् ॥३॥
दुर्लभं सर्वदेवानां, चतुःषष्टिकलास्पदम् ।
पद्मादीनां वरान्तानां, विधीनां नित्यदायकम् ॥४॥
समस्तदेवसंसेव्य, मणिमाद्यष्टसिद्धिदम् ।
किमत्र बहुनोक्तेन, देविप्रत्यक्षदायकम् ॥ ५ ॥
तव प्रीत्याद्य वक्ष्यामि, समाहितमनाः शृणु ।
अष्टोत्तरशतस्यास्य, महालक्ष्मीस्तु देवता ॥ ६ ॥
क्लींबीजपदमित्युक्तं, शक्तिस्तु भुवनेश्वरी ।
अंगन्यासः करन्यासः, स इत्यादिः प्रकीर्तितः ॥ ७॥

## ध्यानम्

वंदे पद्मकरां प्रसन्नवदनां, सौभाग्यदां भाग्यदां
हस्ताभ्यामभयप्रदां मणिगणै, र्नानाविधैर्भूषिताम्।
भक्ताभीष्ट फलप्रदां हरिहर, ब्रह्मादिभिः सेवितां
पार्श्वे पंकजशंखपद्मनिधिभि,र्युक्तां सदा शक्तिभिः ॥ ८ ॥
सरसिजनयने, सरोजहस्ते, धवलतमांशुक, गंधमाल्य शोभे।
भगवति हरिवल्लभे मनोज्ञे, त्रिभुवन भूतिकरि प्रसीद मह्यम् ॥ ९ ॥
☆ ॐ प्रकृतिं विकृतिं विद्यां, सर्वभूतहितप्रदाम्। ☆
श्रद्धां विभूतिं सुरभिं, नमामि परमात्मिकाम् ॥ १० ॥
वाचं पद्मालयां पद्मां, शुचिं स्वाहां स्वधां सुधाम्।
धन्यां हिरण्मयीं लक्ष्मीं, नित्यपुष्टां विभावरीम् ॥ ११ ॥
अदितिं च दितिं दीप्तां, वसुधां वसुधारिणीम्।
नमामि कमलां कान्तां, कामाक्षीं क्रोधसंभवाम् ॥ १२ ॥
अनुग्रहपदां बुद्धिमनघां हरिवल्लभाम्।
अशोकाममृतां दीप्तां, लोकशोकविनाशिनीम् ॥ १३ ॥
नमामि धर्मनिलयां, करुणां लोकमातरम्।
पद्मप्रियां पद्महस्तां, पद्माक्षीं पद्मसुंदरीम् ॥ १४ ॥

पद्मोद्भवां पद्ममुखीं, पद्मनाभप्रियां रमाम्।
पद्ममालाधरां देवीं, पद्मिनीं पद्मगंधिनीम् ॥ १५ ॥
पुण्यगंधां सुप्रसन्नां, प्रसादाभिमुखीं प्रभाम्।
नमामि चन्द्रवदनां, चन्द्रा चन्द्रसहोदरीम् ॥ १६ ॥
चतुर्भुजां चन्द्ररुपा, मिंदिरामिंदुशीतलाम्।
आह्लादजननीं पुष्टीं, शिवां शिवकरीं सतीम् ॥ १७ ॥
विमलां विश्वजननीं, तुष्टीं दारिद्र्यनाशिनीम्।
प्रीतिपुष्करिणीं शांतां, शुक्लमाल्यांबरां श्रियम् ॥ १८ ॥
भास्करीं बिल्वनिलयां, वरारोहां यशस्विनीम्।
वसुंधरामुदारागीं, हरिणीं हेममालिनीम् ॥ १९ ॥
धनधान्यकरीं सिद्धिं, सदा सौम्यां शुभप्रदाम्।
नृपवेश्मगतांनंदां, वरलक्ष्मिं वसुप्रदाम् ॥ २० ॥
शुभां हिरण्यप्राकारां, समुद्रतनयां जयाम्।
नमामि मंगलां देवीं, विष्णुवक्षःस्थलस्थिताम् ॥ २१ ॥
विष्णुपत्नीं प्रसन्नाक्षीं, नारायणसमाश्रिताम्।
दारिद्र्यध्वंसिनीं देवीं, सर्वोपद्रवहारिणीम् ॥ २२ ॥
नवदुर्गां महाकालीं, ब्रह्माविष्णुशिवात्मिकाम्।
☆ त्रिकालज्ञानसंपन्नां, नमामि भुवनेश्वरीम् ॥ २३ ॥ ☆

लक्ष्मीं क्षीरसमुद्रराजतनयां, श्रीरंगधामेश्वरीम्
दासीभूतसमस्तदेववनितां, लोकैकदीपांकुराम्।
श्रीमन्मन्दकटाक्ष लब्धविभव, ब्रह्ममेंद्रगंगाधरां
त्वां त्रैलोक्यकुटुम्बिनीं सरसिजां, वंदे मुकुन्दप्रियाम्॥ २४॥
मातर्नमामि कमले कमलायताक्षि
श्रीविष्णुहृत्कमलवासिनि विश्वमात।
क्षीरोदजे कमल कोमलगर्भगौरी
लक्ष्मि प्रसीद सततं नमतां शरण्ये॥ २५॥
त्रिकालं यो जपेद्विद्वान्, षण्मासं विजितेन्द्रियः।
दारिद्र्य ध्वसनं कृत्वा, सर्वमाप्नोत्ययत्नतः॥ २६॥
देविनामसहस्रेषु, पुण्यमष्टोत्तरं शतम्।
येन श्रियमवाप्नोति, कोटिजन्मदरिद्रतः॥ २७॥
भृगुवारे शतं धीमान्, पठेद्वत्सरमात्रकम्।
अष्टैश्वर्यमवाप्नोति, कुबेर इव भूतले॥ २८॥
दारिद्र्यमोचनं नाम, स्तोत्रमम्बापरं शतम्।
येन श्रियमवाप्नोति, कोटिजन्मदरिद्रतः॥ २९॥
भुक्त्वा तु विपुलान्भोगा, नस्याः सायुज्यमाप्नुयात्।
प्रातःकाले पठेन्नित्यं, सर्वदुःखोपशान्तये।

पठंस्तु चिंतयेद्देवीं, सर्वाभरणभूषिताम् ॥ ३० ॥

*॥ ॐ श्री लक्ष्म्यष्टोत्तर शतनामस्तोत्रम् सम्पूर्णम् ॥*

## -: शिवतांडवस्तोत्रम् :-

जटाकटाहसंभ्रमं भ्रमन्निलिम्पनिर्झरी-
विलोलवीचिवल्लरीविराजमानमूर्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिःप्रतिक्षणं मम ॥१॥

धराधरेन्द्रनन्दिनीविलासबंधुबन्धुर-
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीं निरुद्धदुर्धरापदि
क्वचिच्चिदम्बरे मनोविनोदमेतु वस्तुनि ॥२॥

जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा
कदम्बकुंकुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदांधसिंधुरस्फुरत्त्वगुत्तरीयमेदुरे
मनोविनोदमद्भुतं बिभर्तुभूतभर्त्तरि ॥३॥

सहस्रलोचनप्रभृत्यशेषलेखशेखर-

प्रसूनधूलिधोरणी विधूसरांघ्रिपीठभूः ।
भुजङ्गराजमालया निबद्धजाटजूटकः
श्रियेचिराय जायतां चकोरबन्धुशेखरः ॥४॥
ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा ।
निपीतपञ्चसायकं नमन्निलिम्पनायकम्
सुधामयूखलेखयाविराजमानशेखरं
महाकपालिसम्पदे शिरो जटालमस्तु नः ॥५॥
करालभालपट्टिकाधगद्धगद्धगज्ज्वल-
द्धनञ्जयाधरीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक-
प्रकल्पनैकशिल्पिनि त्रिलोचने मतिर्मम ॥६॥
नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुरद्
कुहूनिशीथिनीतमः प्रबन्धबन्धुकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः
कलानिधानबन्धुरः श्रियं जगद्धुरंधरः ॥७॥
प्रफुल्लनीलपङ्कजप्रपञ्चकालिमच्छटा-
ऽविलम्बिकण्ठकन्धरारुचिप्रबन्धकन्धरम्

